# संस्कृत-साहित्यम्

## *(कक्षा नवमी)*



[ शिवराजविजयः- प्रथमनिःश्वासः
रघुवंशः- प्रथमः सर्गः ]


सम्पादकः

**चिरञ्जीवी खतिवडा**



प्रकाशकः

**ॐ नमः शिवाय प्रकाशनम्**

देवघट्टः-५, तनहुँ

**२०७९**

### श्रीमदम्बिकादत्तव्यासविरचितः

# शिवराजविजयः

## प्रथमनिःश्वासः

"विष्णोर्माया भगवती यया सम्मोहितं जगत् ।" (भागवतम् १०।१।२५)

"हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भायाद् विमुच्यते ।" (भागवतम् १०।७।३१)

"अरुण एष प्रकाशः पूर्वस्यां भगवतो मरीचिमालिनः । एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचर–चक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकमण्डलस्य, शोक–विमोकः कोक–लोकस्य, अवलम्बो रोलम्बकदम्बस्य, सूत्रधारः सर्वव्यवहारस्य, ईनश्च दिनस्य । अयमेव अहोरात्रं जनयति, अयमेव वत्सरं द्वादशसु भागेषु विभनक्ति, अयमेव कारणं षण्णामृतुनाम्, एष एवाङ्गीकरोति उत्तरं दक्षिणं चायनम्, एनेनैव सम्पादिता युगभेदाः, एनेनैव कृताः कल्पभेदाः, एनमेवाऽऽश्रित्य भवति परमेष्ठिनः परार्द्धसङ्ख्या, असावेव चर्कति बर्भर्ति जर्हर्ति च जगत्, वेदा एतस्यैव वन्दिनः, गायत्री अमुमेव गायति, ब्रह्मनिष्ठा ब्राह्मणा अमुमेवाहररुपतिष्ठन्ते । धन्य एष कुलमूलं श्रीरामचन्द्रस्य, प्रणम्य एष विश्वेषामि"ति उदेष्यन्तं भास्वन्तं प्रणमन् निजपर्णकुटीरात् निश्चक्राम कश्चित् गुरुसेवनपटुर्विप्रवटुः ।।१।।

"अहो ! चिररात्राय सुप्तोऽहम्, स्वप्नजालपरतन्त्रेणैव महान् पुण्यमयः समयोऽतिवाहितः, सन्ध्योपासन–समयोऽयमस्मद्गुरुचरणानाम्, तत् सपदि अवचिनोमि कुसुमानि" इति चिन्तयन् कदलीदलमेकमाकुञ्च्य, तृणशकलैः सन्धाय, पुटकं विधाय, पुष्पावचयं कर्त्तुमारेभे ।।२।।

वटुरसौ आकृत्या सुन्दरः, वर्णेन गौरः, जटाभिर्ब्रह्मचारी, वयसा षोडशवर्षदेशीयः, कम्बुकण्ठः, आयतललाटः, सुबाहुर्विशाललोचनश्चाऽऽसीत् ।।३।।

कदलीदलकुञ्जायितस्य एतत्कुटीरस्य समन्तात् पुष्पवाटिका, पूर्वतः परम–पवित्र–पानीयं परस्सहस्र–पुण्डरीक–पटल–परिलसितं पतत्रि–कुल–कूजितं–पूजितं पयःपूरितं सर आसीत् । दक्षिणतश्चैको निर्झर–झर्झर–ध्वनि–ध्वनित–दिगन्तरः फल–पटलाऽऽस्वाद–चपलित–चञ्चु–पतङ्गकुलाऽऽक्रमणाधिक–विनत–शाख–शाखि–समूह–व्याप्तः सुन्दर–कन्दरः पर्वतखण्ड आसीत् ।।४।।

यावदेष ब्रह्मचारी वटुरलिपुञ्जमुद्धूय कुसुमकोरकानवचिनोति तावत् तस्यैव सतीर्थ्योऽपरस्तत्समानवयाः कस्तूरिका–रेणु–रूषित इव श्यामः, चन्दन–चर्चित–भालः, कपूरागुरु–क्षोद–च्छुरित–वक्षो–बाहु–दण्डः, सुगन्ध–पटलैरुन्निद्रयन्निव निद्रा–मन्थराणि कोरक–निकुरम्बकान्तराल–सुप्तानि मिलिन्द–वृन्दानि झटिति समुपसृत्य निवारयन् गौरवटुमेवमवादीत्— ।।५।।

"अलं भो अलम् ! मयैव पूर्वमवचितानि कुसुमानि, त्वं तु चिरं रात्रावजागरीरिति क्षिप्रं नोत्थापितः, गुरुचरणा अत्र तडागतटे सन्ध्यामुपासते, संस्थापिता मया निखिला सामग्री तेषां समीपे । यां च सप्तवर्षकल्पाम्, यावनत्रासेन निःशब्दं रुदतीम्, परमसुन्दरीम्, कलित–मानव–देहामिव सरस्वतीं सान्त्वयन् मरन्द–मधुरा अपः पाययन्, कन्दखण्डानि भोजयन्, त्वं त्रियामाया यामत्रयमनैषीः, सेयमधुना स्वपिति, उद्बुद्ध्य च पुनस्तथैव रोदिष्यति, तत् परिमार्गणीयान्येतस्याः पितरौ गृहं च —"

इति संश्रुत्य उष्णं निःश्वस्य यावत् सोऽपि किञ्चित् वक्तुमियेष तावदकस्मात् पर्वतशिखरे निपपात उभयोर्दृष्टिः ।।६।।

तस्मिन् पर्वते आसीदेको महान् कन्दरः । तस्मिन्नेव महामुनिरेकः समाधौ तिष्ठति स्म । कदा स समाधिमङ्गीकृतवानिति कोऽपि न वेत्ति । ग्रामणी–ग्रामीण–ग्रामाः समागत्य मध्ये मध्ये तं पूजयन्ति प्रणवन्ति स्तुवन्ति च । तं केचित् कपिल इति, अपरे लोमश इति, इतरे जैगीषव्य इति, अन्ये च मार्कण्डेय इति विश्वसन्ति स्म । स एवायमधुना शिखरादवतरन् ब्रह्मचारि–वटुभ्यामदर्शि ।।७।।

"अहो ! प्रबुद्धो मुनिः ! प्रबुद्धो मुनिः ! इत एवाऽऽगच्छति, इत एवाऽऽगच्छति, सत्कार्योऽयम् सत्कार्योऽयम्" इति तौ सम्भ्रान्तौ बभूवतुः । अथ समापित–सन्ध्यावन्दनादिक्रिये समायाते गुरौ, तदाज्ञया नित्यनियमसम्पादनाय प्रयाते गौरवटौ, छात्रगणसहकारेण प्रस्तुतासु च स्वागतसामग्रीषु, "इत आगम्यतां सनाथ्यतामेष आश्रमः" इति सप्रणाममभिगम्य वदत्सु निखिलेषु, योगिराज आगत्य तन्निर्दिष्टकाष्ठपीठं भास्वानिवोदयगिरिमारुरोह, उपाविशच्च ।।८।।

तस्मिन् पूज्यमाने, "योगिराडुत्थित" इति "आयात" इति च आकर्ण्य कर्णपरम्परया बहवो जनाः परितः स्थिताः । सुघटितं शरीरम्, सान्द्रां जटाम्, विशालान्यङ्गानि, अङ्गारप्रतिमे नयने, मधुरां गम्भीरां च वाचं वर्णयन्तश्चकिता इव सञ्जाताः ।।९।।

अथ योगिराजं सम्पूज्य यावदीहितं किमपि आलपितुम्, तावत् कुटीरात् अश्रूयत तस्या एव बालिकायाः सकरुण–रोदनम् । ततः "किमिति ? कुत इति ? केयमिति ? कथमिति

?" पृच्छापरवशे योगिराजे ब्रह्मचारिगुरुणा बालिकां सान्त्वयितुं श्यामवटुमादिश्य कथितम्— ॥१०॥

"भगवान् ! श्रूयतां यदि कुतूहलम् । ह्यः सम्पादित–सायन्तन–कृत्ये, अत्रैव कुशाऽऽस्तरणमधिष्ठिते मयि, परितः समासीनेषु छात्रवर्गेषु, धीरसमीरस्पर्शेन मन्दमन्दमान्दोल्यमानासु व्रततिषु, समुदिते यामिनीकामिनीचन्दनविन्दौ इव इन्दौ, कौमुदीकपटेन सुधाधारामिव वर्षति गगने, अस्मन्नीतिवार्तां शुश्रूषुषु इव मौनमाकलयत्सु पतग–कुलेषु, कैरव–विकाश–हर्ष–प्रकाश–मुखरेषु चञ्चरीकेषु, अस्पष्टाक्षरम्, कम्पमाननिःश्वासम्, श्लथत्कण्ठम्, घर्घरीतस्वनम्, चीत्कारमात्रम्, दीनतामयम्, अत्यवधानश्रव्यत्वादनुमितदविष्ठतं क्रन्दनमश्रौषम् ॥११॥

तत्क्षणमेव च "कुत इदम् ? किमिदमिति दृश्यतां ज्ञायताम्" इत्यादिश्य छात्रेषु विसृष्टेषु, क्षणानन्तरं छात्रेणैकेन भयभीता सवेगमत्युष्णं दीर्घं निःश्वसती, मृगीव व्याघ्राऽऽघ्राता, अश्रुप्रवहैः स्नाता, सवेपथुः कन्यकैका अङ्के निधाय समानीता । चिरान्वेषणेनापि च तस्याः सहचरी सहचरो वा न प्राप्तः । तां च चन्द्रकलयेव निर्मिताम्, नवनीतेनेव रचिताम्, मृणालगौरीम्, कुन्दकोरकाग्रदतीं सक्षोभं रुदतीमवलोक्याऽस्माभिरपि न पारितं निरोद्धुं नयनवाष्पाणि ॥१२॥

अथ "कन्यके ! मा भैषीः, पुत्री ! त्वां मातुः समीपे प्रापयिष्यामः, दुहितः ! खेदं मा वह, भगवति ! भुङ्क्ष्व किञ्चित्, पिब पयः, एते तव भ्रातरः, यत् कथयिष्यसि तदेव करिष्यामः, मा स्म रोदनैः प्राणान् संशयपदवीमारोपयः, मा स्म कोमलमिदं शरीरं शोकज्वालावलीढं कार्षीः" इति सहस्रधा बोधनेन कथमपि सम्बुद्धा किञ्चित् दुग्धं पीतवती । ततश्च मया क्रोडे उपवेश्य, "बालिके ! कथय क्व ते पितरौ ? कथमेतस्मिन्नाश्रमप्रान्ते समायाता ? किं ते कष्टम् ? कथमरोदीः ? किं वाञ्छसि ? किं कुर्मः ?" इति पृष्टा मुग्धतया अपरिकलित–वाक्पाटवा, भयेन विशिथिलवचनविन्यासा, लज्जया अतिमन्दस्वरा, शोकेन रुद्धकण्ठा, चकितचकितेन कथं कथमपि अबोधयदस्मान् यद्— "एषा अस्मिन्नेदीयस्येव ग्रामे वसतः कस्यापि ब्राह्मणस्य तनयाऽस्ति ॥१३॥

एनां च सुन्दरीमाकलय कोऽपि यवन–तनयो नदीतटान्मातुर्हस्तादाच्छिद्य क्रन्दतीं नीत्वाऽपससार । ततः कञ्चिदध्वानमतिक्रम्य यावदसिधेनुकां सन्दर्श्य बिभीषिकयाऽस्याः क्रन्दन–कोलाहलं शमयितुमियेष, तावदकस्मात् कोऽपि काल–कम्बल इव भल्लूको वनान्तादुपाजगाम । दृष्ट्वैव यवन–तनयोऽसौ तत्रैव त्यक्त्वा कन्यकामिमां

शाल्मलितरुमेकमारुरोह। विप्रतनया चेयं पलाश–पलाशि–श्रेण्यां प्रविश्य घुणाक्षरन्यायेन इत एव समायाता यावद् भयेन पुना रोदितुमारब्धवती, तावदस्मच्छात्रैणैवाऽऽनीते"ति ।।१४।।

तदाकर्ण्य कोपज्वालाज्वलित इव योगी प्रोवाच—"विक्रमराज्येऽपि कथमेष पातकमयो दुराचाराणामुपद्रवः ?"

ततः स उवाच—

"महात्मन् ! क्वाधुना विक्रमराज्यम् ? वीरविक्रमस्य तु भारतभुवं विरहय्य गतस्य वर्षाणां सप्तदश–शतकानि व्यतीतानि। क्वाधुना मन्दिरे मन्दिरे जयजयध्वनिः ? क्व सम्प्रती तीर्थे तीर्थे घण्टानादः ? क्वाद्यापि मठे मठे वेदघोषः ? अद्य हि वेदा विच्छिद्य वीथीषु विक्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्रंशयित्वा भ्राष्ट्रेषु भर्ज्यते, "क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचित् दारा अपह्रियन्ते, क्वचित् धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद् रुधिरधाराः, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः" इत्येव श्रूयतेऽवलोक्यते च परितः ।।१५।।

तदाकर्ण्य दुःखितश्चकितश्च योगिराडुवाच—"कथमेतत् ? ह्य एव पर्वतीयाञ्छकान् विनिर्जित्य महता जयघोषेण स्वराजधानीमायातः श्रीमानादित्य–पदलाञ्छनो वीरविक्रमः। अद्यापि तद्विजयपतामा मम चक्षुषोरग्रत इव समुद्धूयन्ते, अधुनापि तेषां पटहगोमुखादीनां निनादः कर्णशष्कुलीं पूरयतीव, तत् कथमद्य वर्षाणां सप्तदश–शतकानि व्यतीतानि" इति ? ।।१६।।

ततः सर्वेषु स्तब्धेषु चकितेषु च ब्रह्मचारिगुरुणा प्रणम्य कथितम्— "भगवान् ! बद्ध–सिद्धासनैर्निरुद्ध-निश्वासैः प्रबोधितकुण्डलिनीकैर्विजितदशेन्द्रियैरनाहत–नाद–तन्तुमवलम्ब्याऽऽज्ञाचक्रं संस्पृश्य, चन्द्रमण्डलं भित्त्वा, तेजःपुञ्जमविगणय्य, सहस्रदलकमलस्यान्तः प्रविश्य, परमात्मानं साक्षात्कृत्य, तत्रैव रममाणैर्मृत्युञ्जयैरान्दमात्रस्वरूपैर्ध्यानावस्थितैर्भवादृशैर्न ज्ञायते कालवेगः। तस्मिन् समये भवता ये पुरुषा अवलोकिताः तेषां पञ्चाशत्तमोऽपि पुरुषो नावलोक्यते। अद्य न तानि स्रोतांसि नदीनाम् न सा संस्था नगराणाम्, न सा आकृतिर्गिरीणाम्, न सा सान्द्रता विपिनानाम्। किमधिकं कथयामो भारतवर्षमधुना अन्यादृशमेव सम्पन्नमस्ति" ।।१७।।

इदमाकर्ण्य किञ्चित् स्मित्वेव परितोऽवलोक्य त योगी जगाद—"सत्यं न लक्षितो मया समय–वेगः। यौधिष्ठिरे समये कलितसमाधिरहं वैक्रम–समये उदस्थाम्। पुनश्च वैक्रम–समये समाधिमाकलय्य अस्मिन् दुराचारमये समयेऽहमुत्थितोऽस्मि। अहं पुनर्गत्वा समाधिमेव कलयिष्यामि, किन्तु तावत् सङ्क्षिप्य कथ्यतां का दशा भारतवर्षस्येति"— ।।१८।।

तत् संश्रुत्य भारतवर्षीय–दशा–संस्मरण–सञ्जात–शोको हृदयस्थ -प्रसादसम्भारोद्गिरणश्रमेणेवातिमन्थरेण स्वरेण "मा स्म धर्मध्वंसनघोषणैर्योगिराजस्य धैर्यमवधीरय" इति कण्ठं रुन्धतो बाष्पानविगणय्य, नेत्रे प्रमृज्य, उष्णं निःश्वस्य, कातराभ्यामिव नयनाभ्यां परितोऽवलोक्य ब्रह्मचारिगुरुः प्रवक्तुमारभत— "भगवान् ! दम्भोलिघटितेयं रसना, या दारुण–दानवोदन्तोदीरणैर्न दीर्य्यते, लोहसारमयं हृदयम्, यत् संस्मृत्य यावनान् परस्सहस्रान् दुराचारान् शतधा न भिद्यते, भस्मसाच्च न भवति । धिगस्मान्, येऽद्यापि जीवामः, श्वसिमः, विचरामः, आत्मन आर्य्यवंश्यांश्चाऽभिमन्यामहे" ।।१९।।

उपक्रमममुमाकर्ण्य अवलोक्य च मुनेर्विमनायमानं हरिद्राद्रवक्षालितमिव वदनम्, निपतद्वारिबिन्दुनी नयने, अञ्चित–रोमकञ्चुकं शरीरम्, कम्पमानमधरम्, भज्यमानं च स्वरम्, अवागच्छत् "सकलानर्थमयः, सकल–वञ्चनामयः, सकलपापमयः, सकलोपद्रवमयश्चायं वृत्तान्तः"— इति, "अत एव तत्स्मरणमात्रेणापि खिद्यत एष हृदये, तन्नाहमेनं निरर्थं जिग्लापयिषामि, न वा चिखेदयिषामि" इति च विचिन्त्य—

"मुने ! विलक्षणोऽपि भगवान् सकल–कला–कलाप–कलनः सकल–कालनः करालः कालः । स एव कदाचित् पयःपूर–पूरितान्यकूपारतलानि मरूकरोति । सिंह–व्याघ्र–भल्लूक–गण्डक–फरु–शश–सशस्त्र–व्याप्ता–न्यरण्यानि जनपदीकरोति, मन्दिर–प्रासाद–हर्म्य–शृङ्गाटक–चत्वरोद्यान–तडाग–गोष्ठमयानि नगराणि च काननीकरोति । निरीक्ष्यतां कदाचितदस्मिन्नेव भारते वर्षे यायजूकै राजसूयादियज्ञा व्ययाजिषन, कदाचिदिहैव वर्ष–वाताऽऽतप–हिम–सहानि तपांसि अतापिषत । सम्प्रति तु म्लेच्छैर्गावो हन्यन्ते, वेदा विदीर्यन्ते, स्मृतयः समृद्यन्ते, मन्दिराणि मन्दुरी–क्रियन्ते, सत्यः पात्यन्ते, सन्तश्च सन्ताप्यन्ते । सर्वमेतन्माहात्म्यं तस्यैव महाकालस्येति कथं धीरधौरेयोऽपि धैर्यं विधुरयसि ? शान्तिमाकलय्यातिसङ्क्षेपेण कथय यवनराज्य–वृत्तान्तम् । न जाने किमित्यनावश्यकमपि शुश्रूषते मे हृदयम्"— इति कथयित्वा तूष्णीमवतस्थे ।।२०।।

अथ स मुनिः–"भगवान् ! धैर्येण, प्रसादेन, प्रतापेन, तेजसा, वीर्येण, विक्रमेण, शान्त्या, श्रिया, सौख्येन, धर्मेण विद्यया च सममेव परलोकं सनाथितवति तत्रभवति वीरविक्रमादित्ये, शनैः शनैः पारस्परिकविरोध–विशिथिलीकृतस्नेहबन्धेषु राजसु, भामिनी–भ्रूभङ्ग–भूरिभाव–प्रभाव–पराभूत–वैभवेषु भटेषु, स्वार्थ–चिन्ता–सन्तान–वितानैकतानेष्व–मात्यवर्गेषु, प्रशंसामात्रप्रियेषु प्रभुषु, "इन्द्रस्त्वं वरुणस्त्वं कुबेरस्त्वम्" इति वर्णनामात्रसक्तेषु बुधजनेषु कश्चन गजिनी–स्थाननिवासी महामदो यवनः समेनः प्राविशद् भारते वर्षे । स च प्रजा

विलुण्ठ्य, मन्दिराणि निपात्य, प्रतिमा विभिद्य, परश्शतान् जनांश्च दासीकृत्य, शतश उष्ट्रेषु रत्नान्यारोप्य स्वदेशमनैषीत् ॥२१॥

एवं स ज्ञातास्वादः पौनःपुन्येन द्वादशवारमागत्य भारत–मलुलुण्ठत् । तस्मिन्नेव च स्वसंरम्भे एकदा गुर्जरदेशचूडायितं सोमनाथ–तीर्थमपि धूलीचकार । अद्य तु तत्तीर्थस्य नामापि केनापि न स्मर्यते, परं तत्समये तु लोकोत्तरं तस्य वैभवमासीत् । तत्र हि महार्ह–वैदूर्य–पद्मराग माणिक्य–मुक्ताफलादि–जटितानि कपाटानि स्तम्भान्, गृहावग्रहणीः, भित्तीः, वलभीः विटङ्कानि च निर्मथ्य, रत्ननिचयमादाय, शतद्वयं–मणसुवर्ण–शृङ्गालावलम्बिनीं चञ्चच्चाकक्यचकितीकृतावलोचक–लोचन–निचयां महाघटां प्रसह्य सङ्गृह्य, महादेवमूर्तावपि, गदामुदतूतुलत् ॥२२॥

अथ वीर गृहीतमखिलं वित्तम्, पराजिता आर्य्यसेनाः, बन्दीकृता वयम्, सञ्चितममलं यशः, इतोऽपि न शाम्यति ते क्रोधश्चेदस्मांस्ताडय, मारय, छिन्धि, भिन्धि, पातय, मज्जय, खण्डय, कर्तय, ज्वलयः, किन्तु त्यजेमामकिञ्चित्करीं जडां महादेवप्रतिमाम् । यद्येवं न स्वीकरोति तद् गृहाणस्मत्तोऽन्यदपि सुवर्णकोटिद्वयम्, त्रायस्व, मैनां भगवन्मूर्तिं स्प्राक्षीः" इति साम्रेडं कथयत्सु रुदत्सु पतत्सु विलुण्ठत्सु प्रणमत्सु च पूजकवर्गेषुः, "नाहं मूर्तीर्विक्रीणामि, किन्तु भिनद्मि" इति सङ्गर्ज्य जनताया हाहाकार–कलकलमाकर्णयन् घोरगदया मूर्तिमतुत्रुटत् । गदापातसमकालमेव चानेकार्बुदपद्ममुद्रामूल्यानि रत्नानि मूर्तिमध्यादुच्छलितानि परितोऽवाकीर्यन्त । स च दग्धमुखः तानि रत्नानि मूर्तिखण्डानि च क्रमेलकपृष्ठेष्वारोप्य सिन्धुनदमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत् ॥२३॥

अथ कालक्रमेण सप्ताशीत्युत्तरसहस्रतमे (१०८७) वैक्रमाब्दे सशोकं सकष्टं च प्रणांस्त्यक्तवति महामदे, गोरदेशवासी कश्चित् शहाबुद्दीन–नामा प्रथमं गजिनीदेशमाक्रम्य, महामदकुलं धर्मराजलोकाध्वन्यध्वनीनं विधाय, सर्वाः प्रजाश्च पशुमारं मारयित्वा, तद्रुधिरार्द्रमृदा गोरदेशे बहून् गृहान् निर्माय चतुरङ्गिण्याऽनीकिन्या भारतवर्षं प्रविश्य, शीतलशोणितानप्यसयन् पञ्चाशदुत्तर–द्वादश–शतमितेऽब्दे (१२५०) दिल्लीमश्वयाम्बभूव ॥२४॥

ततो दिल्लीश्वरं पृथ्वीराजं कान्यकुब्जेश्वरं जयचन्द्रं च पारस्परिकविरोध–ज्वर–ग्रस्तं विस्मृत–राजनीतिं भारतवर्ष–दुर्भाग्यायमाणमाकलय्यानायासेनोभावपि विशस्य, वाराणसीपर्यन्तमखण्डमण्डलमकण्टकमकीटकिट्टं महारत्नमिव महाराज्यमङ्गीचकार । तेन वाराणस्यामपि बहवोऽस्थिगिरयः प्रचिताः, रिङ्गत्तरङ्गभङ्गा गङ्गाऽपि शोणित–शोणा शोणीकृता, परस्सहस्राणि च देवमन्दिराणि भूमिसात्कृतानि । स एव प्राधान्येन भारते

यावनराज्याङ्कुराऽऽरोपकोऽभूत् । तस्यैव च कश्चित् क्रीतदासः कुतुबुद्दीननामा प्रथमभारतसम्राट् सञ्जातः ॥२५॥

तमारभ्याद्यावधि राक्षासा एव राज्यमकार्षुः । दानवा एव च दीनानदीदलन् । अभूत् केवलम् अकबरशाह–नामा यद्यपि गूढशत्रुर्भारतवर्षस्य, तथापि शान्तिप्रियो विद्वत्प्रियश्च । अस्यैव प्रपौत्रो मूर्तिमदिव कलियुगं, गृहीतविग्रह इव चाधर्मः, आलमगीरोपाधिधारी अबरङ्गजीवः सम्प्रति दिल्लीवल्लभतां कलङ्कयति । अस्यैव पताकाः केकयेषु मत्स्येषु मगधेषु अङ्गेषु वङ्गेषु कलिङ्गेषु च दोधूयन्ते, केवलं दक्षिणदेशेऽधुनाऽप्यस्य परिपूर्णो नाधिकारः संवृत्तः ॥२६॥

दक्षिणदेशो हि पर्वतबहुलोऽस्ति, अरण्यानीसङ्कुलश्चास्तीति चिरोद्योगेनापि नायमशकन्महाराष्ट्रकेसरिणो हस्तयितुम् । साम्प्रतमस्यैवाऽऽत्मीयो दक्षिणदेश–शासकत्वेन "शास्तिखान" नामा प्रेष्यत इति श्रूयते । महाराष्ट्रदेशरत्नम्, यवन–शोणित–पिपासाऽऽकुलकृपाणः, वीरतासीमन्तिनी–सीमन्त–सुन्दर–सान्द्र–सिन्दुर–दान–देदीप्यमानदोर्दण्डः, मुकुटमणिर्महाराष्ट्राणाम्, भूषणं भटानाम्, निधिर्नीतीनाम्, कुलभवनं कौशलानाम्, पारावारः परमोत्साहानाम्, कश्चन प्रातःस्मरणीयः, स्वधर्माऽऽग्रह–ग्रह–ग्रहिलः, शिव इव धृतावतारः शिववीरश्चास्मिन् पुण्यनगरान्नेदीयस्येव सिंहदुर्गे ससेनो निवसति । विजयपुराधीश्वरेण साम्प्रतमस्य प्रवृद्धं वैरम् । "कार्यं वा साधयेयं देहं वा पातयेयम् !" इत्यस्य सारगर्भा महती प्रतिज्ञा । सतीनाम्, सताम्, त्रैवर्णिकस्य आर्यकुलस्य, धर्मस्य भारतवर्षस्य च आशा–सन्तान–वितानस्यायमेवाऽऽश्रयः । इयमेव वर्तमाना दशा भारतवर्षस्य । किमधिकं विनिवेदयामो योग–बलावगतसकल–गोप्यतम–वृत्तान्तेषु योगिराजेषु" इति कथयित्वा विरराम ॥२७॥

तदाकर्ण्य विविध–भाव–भङ्ग–भासुर–वदनो योगिराजो मुनिराजं तत्सहचरांश्च निपुणं निरीक्ष्य, तेषामपि शिववीरान्तरङ्गतामङ्गीकृत्य, मुनिवेषव्याजेन स्वधर्मरक्षाव्रतिनश्चोररीकृत्य "विजयतां शिववीरः, सिद्ध्यन्तु भवतां मनोरथाः" इति मन्दं व्याहार्षीत् ॥२८॥

अथ "किमपि पिपृच्छिषामी"ति शनैरभिधाय बद्धकरसम्पुटे सोत्कण्ठे जटिलमुनौ "अवगतम्, यवनयुद्धे विजय एव, दैवादापद्ग्रस्तोऽपि च सखिसाहाय्येनाऽऽत्मानमुद्धरिष्यति" इति समभाणीत् । मुनिश्च गृहीतमित्युदीर्य, पुनः किञ्चित् विचार्य्येव स्मृत्वेव च, दीर्घमुष्णं निःश्वस्य, रोरुध्यमानैरपि किञ्चिदुद्गतैर्बाष्पबिन्दुभिराकुलनयनो "भगवान् ! प्रायो दुर्लभो युष्मादृक्षाणां साक्षात्कार इत्यपराऽपि पृच्छाऽऽच्छादयति माम्" इति न्यवेदीत् । स च "आम् ! ऊरीकृतम्, जीवति सः, सुखेनैवाऽऽस्ते" इत्युदतीतरत् । अथ "तं कदा द्रक्ष्यामि" इति पुनः

पृष्टवति "तद्विवाहसमये द्रक्ष्यसि" इत्यभिधाय, बहूनि सान्त्वनावचनानि च गम्भीरस्वरेणोक्त्वा, सपदि उपत्यकाम्, गण्डशैलान् अधित्यकां चाऽऽरुह्य पुनस्तस्मिन्नेव पर्वतकन्दरे तपस्तप्तुं जगाम ॥२९॥

ततः शनैः शनैर्नियातेष्वपरिचितजनेषु, संवृत्ते च निर्मक्षिके, मुनिर्गौरवटुमाहूय, विजयपुराधीशाऽऽज्ञया शिववीरेण सह योद्धुं ससेनं प्रस्थितस्य अपजलखानस्य विषये यावत् किमपि प्रष्टुमियेष, तावत् पादचारध्वनिमिव कस्याप्यश्रौषीत् । तमवधार्याऽन्यमनस्के इव मुनौ गौरवटुरपि तेनैव ध्वनिना कर्णयोः कृष्ट इव समुत्थाय, निपुणं परितो निरीक्ष्य, पर्य्यट्य, 'कोऽयम् ?' इति च साम्रेडं व्याहृत्य, कमप्यनवलोक्य, पुनर्निवृत्य,! 'मन्ये मार्जारः कोऽपि' इति मन्दं गुरवे निवेद्य, पुनस्तथैवोपविवेश । मुनिश्च 'मा स्म कश्चिदितरः श्रौषीत्' इति सशङ्कः क्षणं विरम्य पुनरुपन्यस्तुमारेभे— ॥३०॥

"वत्स गौरसिंह ! अहमत्यन्तं तुष्यामि त्वयि, यत् त्वमेकाकी अपजलखानस्य त्रीनश्वान् तेन दासीकृतान् पञ्च ब्राह्मणतनयांश्च मोचयित्वा आनीतवानसीति । कथं न भवेरीदृशः ? कुलमेवेदृशं राजपुत्रदेशीयक्षत्रियाणाम्" । तावत् पुनरश्रूयत मर्मरः पादक्षेपश्च । ततो विरम्य, मुनिः स्वयमुत्थाय, प्रोच्चं शिलापीठमेकमारुह्य, निपुणतया परितः पश्यन्नपि कारणं किमपि नावलोकयामास चरणाक्षेपशब्दस्य । अतः पुनरेकतानेन निपुणं निरीक्षमाणेन गौरसिंहेन दृष्टं यत् कुटीर–निकटस्थ–निष्कुटक–कदलीकूटे द्वित्रास्तरवोऽतितरां कम्पन्ते इति ॥३१॥

तदेव संशयस्थानमित्यङ्गुल्या निर्दिश्य, कुटीर–वलीके गोपयित्वा स्थापितानामसीनामेकमाकृष्य, रिक्तहस्तेनैव मुनिना पृष्ठतोऽनुगम्यमानः कपोल–तल–विलम्बमानान् चक्षुश्चुम्बिनः कुटिल–कचान् वामकराङ्गुलिभिरपसारयन्, मुनिवेषोऽपि किञ्चित् कोप–कषायित–नयनः, करकम्पित-कृपा-कृपण–कृपणो महादेवमारिराधयिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररसद्वयस्नातः सपदि समागतवान् तन्निकटे, अपश्यच्च लताप्रतान–वितान–वेष्टित–रम्भा–स्तम्भ–त्रितयस्य मध्ये नीलवस्त्र–खण्ड–वेष्टित–मूर्द्धानं हरित–कञ्चुकं श्याम–वसनानद्ध–कटितट–कर्बुराधोवसनम्, काकासनेनोपविष्टम्, रम्भालवाल–लग्नाधोमुख–खड्गत्सरुन्यस्त–विपर्यस्त–हस्त–युगलम्, लसुनगन्धिभिर्निश्वासैः कदली–किसलयानि मलिनयन्तम्, नवाङ्कुरितश्मश्रुश्रेणिच्छलेन कन्यकापहरण–पङ्क–कलङ्क-पङ्क–कलङ्कितााननम्, विंशतिवर्ष–कल्पं यवनयुवकम् । ततः परस्परं चाक्षुषे सम्पन्ने दृष्टोऽहमिति निश्चित्य उत्प्लुत्य कोशात् कृपाणमाकृष्य, युयुत्सुः सोऽपि सम्मुखमवतस्थे । ततस्तयोरेवं सञ्जाताः परस्परमालापाः ॥३२॥

गौरसिंहः— कुतो रे यवन–कुल–कलङ्क !

यवन–युवकः— आ ! वयमपि कुत इति प्रष्टव्याः ? भारतीयकन्दरिकन्दरेष्वपि वयं विचरामः, शृङ्ग–लाङ्गूल-विहीनानां हिन्दुपदव्यवहार्याणां पशूनामाखेटक्रीडया रमामहे।

गौरसिंहः— (सक्रोधं विहस्य) वयमपि तु स्वाङ्कागतसत्त्ववृत्तयः शिवस्य गणा अत्रैव निवसामः, तत् सुप्रभातमद्य, स्वयमेव त्वं दीर्घदावदहने पतङ्गायितोऽसि।

यवनयुवकः— अरे रे वाचाल ! ह्यो रात्रौ युष्मत्कुटीरे रुदतीं समायातां ब्राह्मण–तनयां सपदि प्रयच्छथ, तत् कदाचित् दयया जीवतोऽपि त्यजेयम्, अन्यथा मदसिभुजङ्गिन्या दष्टाः क्षणात् कथावशेषाः संवत्स्यर्थ ॥३३॥

कलकलमेतमाकर्ण्य श्यामवटुरपि कन्यासमीपादुत्थाय दृष्ट्वा च हन्तुमेतं यवनवराकं पर्य्याप्तोऽयं गौरसिंह इति मा स्म गमदन्योऽपि कश्चित् कन्यकामपजिहीर्षुरिति वलीकादेकं विकटखड्गमाकृष्य त्सरौ गृहीत्वा कन्यकां रक्षन्, तदध्युषित–कुटीर–निकट एव तस्थौ।

गौरसिंहस्तु 'कुटीरान्तः कन्यकाऽस्ति, सा च यवन–वध–व्यसनिनि मयि जीवति न शक्या द्रष्टुमपि, किं नाम स्प्रष्टुम् ? तद् यावत् तव कवोष्ण–शोणित–तृषित एष चन्द्रहासो न चलति, तावत् कूर्दनं वा उत्फालं वा यच्चिकीर्षसि तद् विधेहि' इत्युक्त्वा व्यालीढमर्य्यादया सज्जः समतिष्ठत ॥३४॥

ततो गौरसिंहः दक्षिणान् वामांश्च परश्शतान् कृपाणमार्गानङ्गीकृतवतः, दिनकरकरस्पर्शचतुर्गुणीकृतचाकचक्यैः चञ्चच्चन्द्रहासचमत्कारैश्चक्षूंषि मुष्णतः, यवनयुवकहतकस्य, केनाप्यनुपलक्षितोद्योगः, अकस्मादेव स्वासिना कलितक्लेदसञ्जात-स्वेदजलजालं विशिथिलकचकुलमालं भग्नभ्रूभयानकभालं शिरश्चिच्छेद ॥३५॥

अथ मुनिरपि दाडिमकुसुमास्तरणाच्छन्नायामिव वसुधायां शयानं वियुज्यमान–भारतभुवमालिङ्गन्तमिव निर्जीवीभवदङ्गबन्ध–चालनपरं शोणित–सङ्घात–व्योजेनान्तःस्थित–रजोराशिमिवोद्गिरन्तं कलित–सायन्तन–घनाऽऽडम्बर–विभ्रमं सतत–ताम्रचूडभक्षण–पातकेनेव ताम्रीकृतं छिन्न–कन्धरं यवनहतकमवलोक्य सहर्षं ससाधुवादं सरोमोद्गमं च गौरसिंहमाश्लिष्य, भ्रूभङ्गमात्राऽऽज्ञप्तेन भृत्येन मृतकञ्चुककटिबन्धोष्णीषादिकमन्विष्य आनीतं पत्रमेकमादाय सगणः स्वकुटीरं प्रविवेश ॥३६॥

*॥ इति प्रथमनिःश्वासः ॥*

# रघुवंशमहाकाव्यम्

## प्रथमसर्गः

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥१॥**

(अहम्) वागर्थौ, इव, सम्पृक्तौ, जगतः, पितरौ पार्वती-परमेश्वरौ, वागर्थप्रतिपत्तये, वन्दे ॥१॥

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥२॥**

सूर्यप्रभवः, वंशः, क्व ? अल्पविषया मतिश्च, क्व ? (अहम्) मोहात्, दुस्तरम्, सागरम्,उडुपेन, तितीर्षुः, अस्मि ॥२॥

**मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ।**
**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥३॥**

मन्दः(तथापि), कवियशःप्रार्थी, (अहम्) प्रांशुलभ्ये, फले, लोभात्, उद्बाहुःवामन इव, उपहास्यताम्, गमिष्यामि ॥३॥

**अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥४॥**

अथवा पूर्वसूरिभिः कृतवाग्द्वारे अस्मिन् (रघु) वंशे वज्रसमुत्कीर्णे मणौ सूत्रस्य ( गतिः ) इव मे गतिः अस्ति ॥४॥

**सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।**
**आसमुद्रक्षितिशानामानाकरथवर्त्मनाम् ॥५॥**

सः अहम् आजन्मशुद्धानाम्, आफलोदयकर्मणाम्,आसमुद्रक्षितीशानाम्, आनाकरथवर्त्मनाम् (रघूणामन्वयं वक्ष्ये) ॥५॥

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।**
**यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥६॥**

(सोऽहं ) यथाविधिहुताग्नीनां, यथाकामार्चितार्थिनाम्, यथाऽपराधदण्डानां, यथाकालप्रबोधिनाम्, ( रघूणामन्वयं वक्ष्ये ) ॥६॥

**त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥७॥**

(सोऽहं ) त्यागाय सम्भृतार्थानां, सत्याय मितभाषिणाम्, यशसे विजिगीषूणां, प्रजायै गृहमेधिनाम् ( रघूणामन्वयं वक्ष्ये ) ॥७॥

**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।**
**वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥८॥**

(सोऽहम् ) शैशवेऽभ्यस्तविद्यानां, यौवने विषयैषिणाम्, वार्धके मुनिवृत्तिनाम् अन्ते योगेन तनुत्यजाम् ( रघूणामन्वयं वक्ष्ये ) ॥८॥

**रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।**
**तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥९॥**

सोऽहं तनुवाग्विभवः अपि तद्गुणैः कर्णम् आगत्य चापलाय प्रचोदितः सन् रघूणाम् अन्वयं वक्ष्ये ॥९॥

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥१०॥**

तं सदसद्व्यक्तिहेतवः सन्तः श्रोतुम् अर्हन्ति । हि हेम्नः विशुद्धिः श्यामिका अपि वा अग्नौ संलक्ष्यते ॥१०॥

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।**
**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥११॥**

मनीषिणां माननीयः छन्दसां प्रणवः इव महीक्षिताम् आद्यः वैवस्वतो नाम मनुः आसीत् ॥११॥

**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।**
**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥१२॥**

शुद्धिमति तदन्वये शुद्धिमत्तरः दिलीप इति राजेन्दुः क्षीरन्तिधौ इन्दुः इव प्रसूतः ॥१२॥

**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥१३॥**

व्यूढोरस्कः वृषस्कन्धः शालप्रांशुः महाभुजः आत्मकर्म क्षमं देहम् आश्रितः क्षात्रः धर्म इव (स्थितः आसीत्) ॥१३॥

**सर्वातिरिक्तसारेण सर्वतेजोभिभाविना ।**
**स्थितः सर्वोन्नतेर्वीं क्रान्त्वा मेरुरिवात्मना ॥१४॥**

सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना सर्वोन्नतेन आत्मना मेरुः इव उर्वीं क्रान्त्वा (स्थितः आसीत्) ॥१४॥

**आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।**
**आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥१५॥**

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः,सदृशागमः आगमैः सदृशाराम्भः, आरम्भसदृशोदयः (दिलीप आसीत्) ॥१५॥

**भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।**
**अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥१६॥**

भीमकान्तैः नृपगुणैः सः उपजीविनाम् यादोरत्नैः अर्णव इव अधृष्यः अभिगम्यः न बभूव ॥१६॥

**रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम् ।**
**न व्यतीयुः प्रजास्तस्य नियुन्तुर्नेमिवृत्तयः ॥१७॥**

नियन्तुः तस्य नेमिवृत्तयः प्रजाः आमनोः क्षुण्णात् वर्त्मनः परं रखामात्रमपि न व्यतीयुः ॥१७॥

**प्रजानामेव भूत्यर्थः स ताभ्यो बलिमग्रहीत् ।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥१८॥**

सः प्रजानां भूत्यर्थम् एव ताभ्यः बलिम् अग्रहीत् । हि रविः सहस्रगुणम् उत्स्रष्टुं रसम् आदत्ते ॥१८॥

**सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम् ।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥१९॥**

तस्य सेना परिच्छदः आसीत् । अर्थसाधनं शास्त्रेषु अकुण्ठिता बुद्धिः, धनुषि आतता मौर्वी च द्वयम् एव बभूव ॥१९॥

**तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।**
**फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥२०॥**

संवृतमन्त्रस्य गूढाकारेङ्गितस्य च तस्य प्रारम्भाः प्राक्तना संस्कारा इव फलानुमेया (आसन्) ॥२०॥

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥२१॥

सः अत्रस्तः सन् आत्मानं जुगोप, अनातुरः धर्मं भेजे। अगृध्नुः अर्थम् आददे, असक्तः (सन्) सुखम् अन्वभूत् ॥२१॥

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुवन्धित्वात् तस्य सप्रसवा इव ॥२२॥

ज्ञाने मौनं, शक्तौ क्षमा, त्यागे श्लाघाविपर्ययः, तस्य गुणाः गुणानुबन्धित्वात् (तस्य) सप्रसवा इव (अभूवन् )॥२२॥

अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥२३॥

विषयैः अनाकृष्टस्य विद्यानां पारदृश्वनः धर्मरतेः तस्य जरसा विना वृद्धत्वम् आसीत् ॥२३॥

प्रजानां विनयाधानाद् रक्षणाद् भरणादपि ।
सपिता पितरस्तासां केवलं जन्महेतवः ॥२४॥

प्रजानां विनयाधानाद् रक्षणात् भरणात् अपि स एव पिता आसीत्। तासां पितरस्तु जन्महेतवः केवलम् आसन् ॥२४॥

स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥२५॥

दण्ड्यान् स्थित्यै दण्डयतः, प्रसूतये परिणेतुः। मनीषिणः तस्य अर्थकामौ अपि धर्म एव आस्ताम् ॥२५॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥२६॥

सः यज्ञाय गां दुदोह, मघवा सस्याय दिवं दुदोह एवम् उभौ सम्पद्विनिमयेन भुवनद्वयं दधतुः॥२६॥

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥२७॥

राजानः रक्षितुः तस्य यशो न अनुययुः किल। यत् तस्करता परस्वेभ्यः व्यावृत्ता श्रुतौ स्थिता ॥२७॥

द्वेष्योऽपि संमतः शिष्टस्तस्यार्थस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥२८॥

शिष्टः द्वेष्योऽपि आर्त्तस्य औषधं यथा तस्य संमतः आसीत् । दुष्टः प्रियः अपि उरगक्षता अङ्गुली इव तस्य त्याज्यः आसीत् ॥२८॥

तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथा हि सर्वे तस्यासन् परार्थैकफला गुणाः ॥२९॥

वेधाः तं महाभूतसमाधिना विदधे नूनम् । तथाहि तस्य सर्वे गुणाः परार्थैकफलाः आसन् ॥२९॥

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥३०॥

सः वेलावप्रवलयां परिखीकृत सागराम् अनन्यशासनाम् उर्वीम् एकपुरीम् इव शशास ॥३०॥

तस्य दाक्षिण्यरूढेन नाम्ना समधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥३१॥

तस्य मगवंशजा दाक्षिण्यारूढेन नाम्ना अध्वरस्य दक्षिणा इव सुरदक्षिणा इति पत्नी आसीत् ॥३१॥

कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥३२॥

वसुधाधिपः अवरोधे महति अपि मनस्विन्या तया लक्ष्म्या च आत्मनं कलत्रवन्तं मेने ॥३२॥

तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥३३॥

सः आत्मानुरूपायां तस्याम् आत्मजन्मसमुत्सुकः विलम्बितफलैः मनोरथैः कालं निनाय ॥३३॥

सन्तानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥३४॥

तेन सन्तानार्थाय विधये स्वभुजादवतारिता जगतो गुर्वी धूः सचिवेषु निचिक्षिपे ॥३४॥

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसुष्ठस्य गुरोर्जग्मतुराश्रमम् ॥३५॥

अथ पुत्रकाम्यया तौ दम्पतीप्रयतौ विधाताराम् अभ्यर्च्य गुरोः वसिष्ठस्य आश्रमं जग्मतुः ॥३५॥

**स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।**
**प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥३६॥**

स्निग्धगम्भीरनिर्घोषम् एकं स्यन्दनं प्रावृषेण्यं पयोवाहं विद्युदैरावतौ इव अस्थितौ (तौ गुरोः वसिष्ठस्याश्रमं जग्मतुः) ॥३६॥

**मा भूदश्रमपीडेति परिमेयपुरःसरौ ।**
**अनुभावविशेषात्तु सेनापरिवृताविव ॥३७॥**

आश्रमपीडा मा भूत् इति परिमेयपुरःसरौ अनुभावविशेषात्तु सेनापरिवृतौ इव तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः ॥३७॥

**सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।**
**पुष्करेणूत्किरैर्वातैराधूतवनराजिभिः ॥३८॥**

सुखस्पर्शैः शालनिर्यासगन्धिभिः पुष्करेणूत्किरैः आधूतवनराजिभिः वातैः सेव्यमानौ (तौ दम्पती गुरोर्वसिष्ठस्याश्रमं जग्मतुः) ॥३८॥

**मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।**
**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥३९॥**

रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधा भिन्नाः षड्जसंवादिनीः मनोऽभिरामाः केकाः शृण्वन्तौ (तौ गुरोराश्रमं जग्मतुः) ॥३९॥

**परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥४०॥**

अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगेद्वनद्वेषु परस्पराक्षिसादृश्यं पश्यन्तौ (तौ दम्पती गुरोर्वसिष्ठस्याश्रमं जग्मतुः) ॥४०॥

**श्रेणीबन्धाद् वितन्वद्भिरस्तम्भां तोरणस्रजम् ।**
**सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥४१॥**

श्रेणीबन्धनाद् अस्तम्भां तोरणस्रजं वितन्वद्भिः कलनिर्ह्रादैः सारसैः क्वचिद् उन्नमिताननौ (तौ दम्पती गुरोराश्रमं जग्मतुः) ॥४१॥

**पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः ।**
**रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥४२॥**

प्रार्थनासिद्धिशंसिनः पवनस्य अनुकूलत्वात् तुरगोत्वकीर्णैः रजोभिः अस्पृष्टालकवेष्टनौ (तौ दम्पती गुरोर्वसिष्ठस्याश्रमं जग्मतुः) ॥४२॥

**सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।**
**आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥४३॥**

सरसीषु वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणम् अरविन्दनाम् आमोदम् उपजिघ्रन्तौ (तौ दम्पती गुरोर्वसिष्ठस्याश्रमं जग्मतुः) ॥४३॥

**ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।**
**अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥४४॥**

आत्मविसृष्टेषु यूपचिह्नेषु ग्रामेषु यज्वनाम् अर्घ्यानुपदम् अमोघाः आशिषः प्रतिगृह्णन्तौ (तौ दम्पती गुरोर्वसिष्ठस्याश्रमं जग्मतुः) ॥४४॥

**हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।**
**नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥४५॥**

हैयङ्गवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामानि पृच्छन्तौ (तौ दम्पती गुरोर्वसिष्ठस्याश्रमं जग्मतुः) ॥४५॥

**काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः ।**
**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥४६॥**

व्रजतोः शुद्धवेषयोः तयोः हिमनिर्मुक्तयोः चित्राचन्द्रमसोरिव योगे काप्यभिख्या आसीत् ॥४६॥

**तत्तद् भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः ।**
**अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥४७॥**

प्रियदर्शनः बुधोपमः भूमिपतिः पत्न्यै तत्तत् दर्शयन् लङ्घितम् अपि अध्वनं न बुबुधे ॥४७॥

**स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।**
**सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥४८॥**

दुष्प्रापयशाः श्रान्तवाहनः महिषीसखः स सायं संयमिनः तस्य महर्षेः आश्रमं प्रापत् ॥४८॥

**वनान्तरादुपावृत्तैः समित्-कुश-फलाहरैः ।**
**पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥४९॥**

वनान्तरात् भिन्नात् वनात्, उपावृत्तैः प्रत्यागतैः, समित्कुशफलाहरैः अदृश्याग्निप्रत्युद्यातैः तपस्विभिः पूर्यमाणं (महर्षेः आश्रमं प्रापत्) ॥४९॥

आकीर्णमृषीपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिपव नीवारभागधेययोचितैर्मृगैः ॥५०॥

नीवारभावगधेयोचितैः उटजद्वाररोधिभिः ऋषिपत्नीनाम् अपत्यैः इव मृगैः आकीर्णम् (महर्षेराश्रमं सायं प्रापत्) ॥५०॥

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥५१॥

सेकान्ते मुनिकन्याभिः आलवालाम्बुपायिनां विहङ्गानां विश्वासाय तत्क्षणोज्झितवृक्षकं (महर्षेराश्रमं सायं प्रापत्) ॥५१॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥५२॥

आतपात्ययसंक्षिप्तनीवारासु उटजाङ्गनभूमिषु निषादिभिः मृगैः वर्तितरोमन्थं (महर्षेः आश्रमं सायं प्रापत्) ॥५२॥

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥५३॥

अभ्युत्थिताग्निपिशुनैः, पवनोद्धूतैः आहूतिगन्धिभिः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानम् (महर्षेः आश्रमं सायं प्रापत्) ॥५३॥

अथ यन्तारमादिश्य धुर्यान् विश्रामयति सः ।
तामवारोहयत् पत्नीं रथादवततार च ॥५४॥

अथ सः यन्तारम् धुर्यान् विश्रामय इति आदिश्य तां पत्नीं रथाद् अवारोहयत् अवततार च ॥५४॥

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥५५॥

सभ्याः गुप्ततमेन्द्रियाः मुनयः सभार्याय गोप्त्रे नयचक्षुषे अर्हते तस्मै अर्हणां चक्रुः ॥५५॥

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥५६॥

सः सायन्तनस्य विधेः अन्ते अरुन्धत्या (अन्वासितं) तपोनिधिं स्वाहया अन्वासितं हविर्भुजम् इव ददर्श॥५६॥

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥५७॥

मागधी राज्ञी राजा च तयोः पादान् जगृहतुः । गुरुपत्नी गुरुश्च तौ प्रीत्या प्रतिननन्दतुः ॥५७॥

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥५८॥

अथ विजितारिपुरः वदतां वरः अर्थपतिः अथर्वनिधेः तस्य पुरः अर्थ्यां वाचम् आददे ॥५८॥

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यापर्थपतिर्वाचमाददे वदतां वरः ॥५९॥

अथ विजितारिपुरः वदतां वरः अर्थपतिः अथर्वनिधेः तस्य पुरः अर्थ्यां वाचम् आददे ॥५९॥

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥६०॥

(हे गुरो !) सप्तसु अङ्गेषु शिवम् उपपन्नं ननु । यस्य मे दैवीनां मानुषीणां च आपदां त्वं प्रतिहर्ता त्वं प्रतिहर्ता त्वम् (असि) ॥६०॥

तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥६१॥

दूरात् प्रशमितारिभिः मन्त्रकृतः तव मन्त्रैः दृष्टलक्ष्यभिदः मे शराः प्रत्यादिश्यन्ते इव ॥६१॥

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥६२॥

(हे) होतः ! त्वया विधिवत् अग्निषु आवर्जितं हविः अवग्रहविशोषिणां सस्यानां वृष्टिः भवति ॥६२॥

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥६३॥

मदीयाः प्रजाः पुरुषायुषजीविन्यः निरातङ्काः निरीतयः यत् तस्य हेतु त्वद्ब्रह्मवर्चसम् (एव) ॥६३॥

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धा कथं न स्युः सम्पदो मे निरापदः ॥६४॥

ब्रह्मयोनिना गुरुणा त्वया एवं चिन्त्यमानस्य निरापदः मे सम्पदः सानुबन्धाः कथं न स्युः ॥६४॥

किन्तु वध्वां तवैस्तस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥६५॥

किन्तु तव एतस्यां वध्वाम् अदृष्टसदृशप्रजं मां सद्वीपा अपि रत्नसूः अपि मेदिनी न अवति ॥६५॥

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥६६॥

मत्तः परं पिण्डविच्छेददर्शिनः, वंश्याः स्वधासङ्ग्रहतत्पराः (सन्तः) श्राद्धे प्रकामभुजः न नूनं (भवन्ति) ॥६६॥

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥६७॥

मत्परं दुर्लभं मत्वा मया आवर्जितं पयः पूर्वैः स्वनिःश्वासैः कवोष्णम् उपभुज्यते नूनम् ॥६७॥

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥६८॥

इज्याविशुद्धात्मा प्रजालोपनिमीलितः सः अहम् लोकालोकः अचल इव प्रकाशः च अप्रकाः च (भवामि) ॥६८॥

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥६९॥

तपोदानसमुद्भवं पुण्यं लोकान्तरसुखं, शुद्धवंश्या सन्ततिः परत्र इह च शर्मणे हि (भवति) ॥६९॥

तया हीनं विधातर्मां कथं पश्यन्न दूयसे ?
सिक्तं स्वयमिव स्नेहाद् बन्ध्यमाश्रमवृक्षकम् ॥७०॥

हे विधात ! तया हीनं मां, स्नेहात् स्वयं सिक्तं वन्ध्यम् आश्रमवृक्षकम् इव पश्यन् कथं न दूयसे ॥७०॥

असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥७१॥

हे भगवन् ! मे अन्त्यम् ऋणम् अनिर्वाणस्य दन्तिनः अरुन्तुदम् आलानम् इव असह्यम् अवेहि ॥७१॥

**तस्मान्मुच्ये यथा तात ? संविधातुं तथार्हसि ।**
**इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥७२॥**

हे तात ! तस्मात् यथा मुच्ये तथा संविधातुम् अर्हसि । हि इक्ष्वाकूणां दुरापे अर्थे सिद्धयः त्वदधीनाः (सन्ति) ॥७२॥

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥७३॥**

इति राज्ञा विज्ञापितः ऋषिः ध्यानस्तिमितलोचनः (सन्) क्षणमात्रं सुप्तमीनः ह्रद इव तस्थौ ॥७३॥

**सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम् ।**
**भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥७४॥**

सः प्रणिधानेन भावितात्मा (सन्) भुवो भर्तुः सन्ततेः स्तम्भकारणम् अपश्यन् । अथ एनं प्रत्यबोधयत् ॥७४॥

**पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।**
**आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥७५॥**

पुरा शक्रम् उपस्थाय उर्वीं प्रति यास्यतः तव पथि कल्पतरुच्छायाम् आश्रिता सुरभिः आसीत् ॥७५॥

**धर्मलोपभयाद् राज्ञीमृतुस्नातामिमां स्मरन् ।**
**प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥७६॥**

ऋतुस्नाताम् इमां राज्ञीं धर्मलोपभयात् स्मरन् प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु न आचरः ॥७६॥

**अवजानासि मां यस्मादस्तस्ते न भविष्यति ।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥७७॥**

(हे राजन् !) यस्मात् (त्वं) माम् अवजानासि, अतः मत् प्रसूतिम् अनाराध्य ते प्रजा न भविष्यति इति सा त्वां शशाप ॥७७॥

**स शापो न त्वया राजन् न च सारथिना श्रुतः ।**
**नदत्याकाशगङ्गायाः स्रोतस्याद्दामदिग्गजे ॥७८॥**

हे राजन् ! उद्दामदिग्गजे आकाशगङ्गायाः स्रोतसि नदति (सति) सः शापः न त्वया न च सारथिना श्रुतः ॥७८॥

ईप्सितं तदवज्ञानाद् विध्दि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥७९॥

हे राजन् ! तदवज्ञानात् आत्मनः ईप्सितं साऽर्गलं विद्धि, हि पूज्यपूजाव्यतिक्रमः श्रेयः प्रतिबध्नाति ॥७९॥

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥८०॥

सा च इदानीं दीर्घसत्रस्य प्रचेतसः हविषे भुजङ्गपिहितद्वारं पातालम् अधितिष्ठति ॥८०॥

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥८१॥

तदीयां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः सपत्नीकः (सन्) आराधय । हि सा प्रीता कामदुघा (अस्ति) ॥८१॥

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥८२॥

इति वादिन एव होतुः अस्य आहुतिसाधनं नन्दिनी नाम अनिन्द्या धेनुः वनात् आववृते ॥८२॥

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥८३॥

पल्लस्निग्धापाटला (नन्दिनी) ललाटोदयम् आभुग्नं श्वेतरोमाङ्कं (बिभ्रती) नवं शशिनं बिभ्रति सन्ध्या इव (वनात् आववृते) ॥८३॥

भुवं कोष्णेन कुण्डोघ्नी मेध्येनावभृथादपि ।
प्रस्रवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥८४॥

कोष्णेन अवभृथात् अपि मेध्येन वत्सालोकप्रवर्तिना प्रस्रवेन भुवम् अभिवर्षन्ती कुण्डोध्नी (नन्दिनी वनात् आववृते) ॥८४॥

रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥८५॥

खुरोद्धूतैः अन्तिकाद् गात्रं स्पृशद्भिः रजःकणैः महीक्षितः तीर्थाभिषेकजां शुद्धिम् आदधाना (नन्दिनी वनाद् आववृते) ॥८५॥

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥८६॥

निमित्तज्ञः तपोनिधिः पुण्यदर्शनां तां दृष्ट्वा आशंसितावन्ध्यप्रार्थनं याज्यं पुनः अब्रवीत् ॥८६॥

अदूरवर्तिनीं सिद्धिं राजन् ? विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥८७॥

हे राजन् ! आत्मनः सिद्धिम् अदूरवर्तिनीं विगणय । यत् कल्याणी इयं कीर्तिते एव उपस्थिता (जाता) ॥८७॥

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥८८॥

(हे राजन् !) वन्यवृत्तिः (सन्) इमां गां शश्वत् आत्मानुगमनेन अभ्यसनेन विद्याम् इव प्रसादयितुम् अर्हसि ॥८८॥

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥८९॥

अस्यां प्रस्थितायां प्रतिष्ठेथाः, स्थितायां स्थितम् आचरेः, निषण्णायां निषीद, पीताम्भसि अपः पिबे ॥८९॥

वधूर्भक्तिमती चैनामर्चितामातपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥९०॥

वधूः भक्तिमती (सती) अर्चिताम् एनां प्रातः आतपोवनात् अन्वेतु, सायम् अपि प्रत्युद्व्रजेत् ॥९०॥

इत्या प्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥९१॥

(हे राजन् !) इति त्वं आप्रसादात् अस्याः परिचर्यापरो भव । अविघ्नम् अस्तु, पिता इव पुत्रिणां धुरि स्थेयाः ॥९१॥

तथेति प्रतिजग्राह प्रीतिमान् सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥९२॥

देशकालज्ञः प्रीतिमान् शिष्यः सपरिग्रहः आनतः (सन्) शासितुः आदेशं तथा इति प्रतिजग्राह ॥९२॥

**अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।**
**सूनुः सूनृतवाक् स्रष्टुर्विससर्जोर्जितश्रियम् ॥९३॥**

अथ प्रदोषे दोषज्ञः सुनृतवाक्, स्रष्टुः सूनुः ऊर्जितश्रियं विशांपतिं संवेशाय विससर्ज ॥९३॥

**सत्यामपि तपः सिद्धौ नियमापेक्षया मुनिः ।**
**कल्पवित् कल्पयामास वन्यामेवास्य संविधाम् ॥९४॥**

कल्पवित् मुनिः तपःसिद्धौ सत्याम् अपि नियमापेक्षया अस्य वन्याम् एव संविधां कल्पयामास ॥९४॥

**निर्दिष्टां कुलपतिना स पर्णशाला-**
**मध्यास्य प्रयतपरिग्रहद्वितीयः ।**
**तच्छिष्या – ध्ययन – निवेदितावसानां**
**संविष्टः कुशशयने निशां निनाय ॥९५॥**

सः कुलपतिना निर्दिष्टां पर्णशालां अध्यास्य प्रयतपरिग्रहद्वितीयः कुशशयने संविष्टः-सन्) तच्छिष्याध्ययननिवेदितावसानां निशां निनाय ॥९५॥

***